# 8.अङ्कः

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ।

रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।।

प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ।

भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।

युद्धं च वाचा कर्त्तव्यं निर्वेदवचनं बहु ।।

यथा—शर्मिष्ठाययातिः ।

# 9.वीथी

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।

आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ।।

सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसान्प्रति ।

मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ।।

वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।

असत्प्रलापव्याहारमृद (मार्द) वानि च तानि तु ।।

**Contd…..**

मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।

उद्धात्य (त) कावलगिते प्रपञ्चस्त्रिगतं छलम् ।।

यथा – विक्रमोर्वशीयम्, मालविकाग्निमित्रम् ।

# 10.प्रहसनम्

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ।।
अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ।।
तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ।
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ।।

यथा कन्दर्पकेलिः ।

